माणिकचन्द्र दि० जैन ग्रन्थमाला : ग्रन्थांक—४६

# आराधनासमुच्चयं योगसारसंग्रहश्च

संपादक
डॉ० आदिनाथ नेमिनाथ उपाध्ये
एम० ए०, डी० लिट्०



प्रकाशक
भारतीय ज्ञानपीठ

प्रथमावृत्तिः] वीर निर्वाण संवत् २४९३
सन् १९६७ [ मूल्य १.००

ग्रन्थमाला संपादक
डॉ० हीरालाल जैन व डॉ० आ० ने० उपाध्ये

प्रकाशक
भारतीय ज्ञानपीठ
दुर्गाकुण्ड रोड वाराणसी

प्रथम आवृत्ति : १००० प्रतियाँ
मूल्य
एक रुपया

मुद्रक
सन्मति मुद्रणालय
वाराणसी

## General Editorial

It gives me great pleasure to present here the 49th Number of the Manikchandra D. Jaina Granthamala. It contains two small texts edited by my colleague Dr. A N. Upadhye. The Ms. of the Ārādhanā-samuccaya was procured by him with great efforts; while that of the Yogasārasaṃgraha was inherited by us from the Late Pt. Nathuram Premi. This Granthamālā has done signal service to the cause of Jaina literature by bringing to light many unpublished works. We are grateful to Shri Shanti Prasadji and to his enlightened wife Smt. Ramaji for so generously shouldering the responsibility of this Granthamālā. It is both an opportunity and a challenge to all earnest workers in the fields of Jaina literature. Many small and big works in Sanskrit, Prākrit and Apabhraṁśa still lie neglected in Jaina Bhandaras; and we earnestly appeal to our scholars to edit them and present them in a neat form : this is a duty which we owe to our Ācāryas who have left for us a great heritage in our literature. I thank Dr. A. N. Upadhye for giving us neat editions of the two works which are published for the first time in this volume.

Jabalpur
20-3-67

*H. L. Jain*

# प्रधान सम्पादकीय

श्री माणिकचन्द्र दिगम्बर जैन ग्रन्थमालाके इस ४९वें पुष्पको प्रस्तुत करते हमें बड़ी प्रसन्नता हो रही है। इसमें दो छोटी-छोटी रचनाएँ संग्रहीत हैं जिनका सम्पादन मेरे प्रिय सहयोगी डॉ० आदिनाथ नेमिनाथ उपाध्ये-द्वारा किया गया है। उन्होंने बड़े परिश्रमसे आराधना-समुच्चय-की आदर्श प्रति प्राप्त की तथा योगसारसंग्रहकी प्रति स्वर्गीय पं० नाथूराम-जी प्रेमीके संग्रहसे उपलब्ध हुई।

इस ग्रन्थमालाने अनेक अप्रकाशित ग्रन्थोंको प्रकाशमें लाकर जैन साहित्यकी स्मरणीय सेवा की है। हम श्री शान्तिप्रसादजी तथा उनकी विदुषी पत्नी श्रीमती रमाजीके बहुत कृतज्ञ हैं कि उन्होंने बड़ी उदारता-पूर्वक इस ग्रन्थमालाका भार अपने कन्धोंपर लेना स्वीकार कर लिया। उनका यह सत्कार्य जैन साहित्यके क्षेत्रमें सच्चे कार्यकर्ताओंके लिए एक सुअवसर भी है और चुनौती भी। अभी भी जैन शास्त्रभण्डारोंमें अनेक छोटे-बड़े संस्कृत, प्राकृत व अपभ्रंश ग्रन्थ उपेक्षित दशामें पड़े हुए हैं। हम अपने विद्वानोंसे साग्रह अनुनय करते हैं कि वे उन्हें सम्पादित कर स्वच्छ रूपमें प्रस्तुत करें। जिन आचार्योंने हमारे साहित्यमें ऐसा महान् दाय हमें प्रदान किया है उनके प्रति हमारा यही कर्तव्य व ऋण है।

प्रस्तुत संग्रहमें प्रथम बार प्रकाशित इन दोनों रचनाओंके ऐसे स्वच्छ संस्करण तैयार करनेके लिए मैं डॉ० आ० ने० उपाध्येको हृदयसे धन्य-वाद देता हूँ।

– ही. ला. जैन

## PREFATORY NOTE

Ārādhanā consists in firm and successful accomplishment of ascetic ideals, viz., Darśana ( Faith ), Jñāna (Knowledge), Cāritra (Conduct) and Tapas (Penance), that are laid down in Jainism; in maintaining a high standard of detachment, forbearance, self-restraint and mental equipoise in the critical hour of death; and in attaining spiritual purification and final liberation. The connotation of the term Ārādhanā covers a wide range of dogmatical and ethico-religious discussion to which small and big texts have been devoted. This subject is undoubtedly of immense importance and engrossing interest for a monk who wants to win the spiritual battle. Naturally, the topic of Ārādhanā is discussed in a number of works dealing with Śramaṇa's life, and even independent works have been composed on this theme. I have already listed these works in my Introduction to the Bṛhatkathākośa ( Siṅghi Jain Series, No. 17, Bombay 1943 Intro. pp 48 f.; also H. D. Velankar : Jinaratnakośa, Poona 1944, pp. 31 f. ). In this survey the Ārādhanā-sāra or samuccaya of Ravicandra ( the Mss. of which are reported to exist in Moodabidri and Strassburg ) is duly noted.

While editing the Kārttikeyānuprekṣā along with the Sanskrit commentary of Śubhacandra ( Rājachandra Jaina Śāstramālā, Agas 1960 ) I came across some quotations from the Ārādhanāsāra of Ravicandra in that commentary. In my Introduction I have duly noted there that half a dozen Mss. of Ravicandra's work are reported to exist in Moodabidri ( see K. B. Shastri : Kannaḍa-prāntīya Tāḍapatrīya Granthasūcī, Banaras 1948, pp. 37-8, 207-8 ). After persistent and patient efforts I could secure a transcript of this work from Moodabidri; and, in this connection, I wish to record my sincere thanks to Pt. Devakumar of Moodabidri who kindly supplied it. The text presented here is based on this transcript which is now in the possession of the Jaina Saṃskṛti Saṃrakshaka Sangha, Sholapur. Scribal slips in the transcript are duly corrected; and there have been no occasions for major emendation. The transcript opens :

श्री पंचगुरुम्यो नमः । श्रीरविचन्द्रमुनीन्द्रविरचितः आराधनासमुच्चयः ।
and ends in this way :
इत्याराधनासमुच्चयं समाप्तमिति ॥

This work, possibly following the earlier models in Prākrit, is composed in Gāthās or Āryās in Sanskrit the total number of which is 252. There are 7 quotations here and there in the text, 2 in Prākrit and 5 in

Sanskrit. A glance at the Viṣayānukramaṇikā shows that this small treatise is a systematic composition dealing with the four-fold Ārādhanā and its kindred topics. The major bulk of the verses is devoted to the exposition of the Twelve Anuprekṣās which are included under Cāritra-Ārādhanā. The order of enumeration of these Anuprekṣās is the same as the one adopted by three authors : Śivārya, Vaṭṭakera and Kundakunda. This is but natural, because Śivārya's work, the Bhagavatī Ārādhanā, is a magnificient model for any treatise on Ārādhanā.

From the concluding verse we get very little information about the author. His name is Ravicandra; he calls himself a Munīndra; and he was staying at Panasoge (in Karṇāṭaka) when he composed this work. The name Ravicandra figures in some of the epigraphs in Karnatak. One Ravicandra is mentioned in some of the inscriptions ( Epigraphia Carnatica, XII, Gubbi Taluk, No. 57; Journal of the Bombay Branch of the R. A. S., X, pp. 171-2, 204 f.) from which it seems that he is to be assigned to the last quarter of the 10th century A. D. The Dharwar inscription of A.D. 962 refers to one Ravicandra Munīśvara ( Annual Report of South Indian Epigraphy for 1934-5 23, p. 7 ). Another Ravicandra is mentioned in the Shravan Belgol inscriptions ( E. C., II, No. 53 ), and he lived in about A.D.

1131. One more Ravicandra who is styled as Māsopavāsi and S ( a ) iddhānta is referred to in some inscriptions ( See Nos. 169–70 of A. D. 1096, No. 342 of A. D. 1205, and No. 376 of c. 13th century A. D : Jaina Śilālekha Saṃgraha, Part 4, Varanasi 1964 ). They all flourished in the area of Karnatak. But the information given by our author is so meagre that he cannot be identified with any one of these for the present.

Of the various quotations given by Ravicandra in this Ārādhanāsamuccaya, the one coming after verse No. 204 namely, tattva-jñānam udāsīnam etc., numbered as 204*1, is taken from the Tattvānuśāsanam ( No. 221 ) of Rāmasena (ed. J. Mukthar, Delhi 1963). Pt. Jugalkishore Mukthar assigns Rāmasena c. to the middle of the 10th century A. D. So Ravicandra is later than Rāmasena. Further Ravicandra and his Ārādhanāsāra are specifically mentioned ( pp. 234,391 ) in the Sanskrit commentray of Śubhacandra ( on the Kārttikeyānuprekṣā, ed. noted above) who (see pp. 32, 220, 234,391, and 393) quotes a number of verses from Ravicandra's work ( Nos. 153, 36, 34, 198–205, 206–207 including the quotation 204*1 ). Śubhacandra completed this commentary in A. D. 1556; so Ravicandra must have flourished earlier than this date. Further

investigation is necessary to bring the two limits of his period nearer.

Ravicandra's work is not only a systematic work but also written in a lucid Sanskrit style. By the publication of this text, it is hoped that a welcome addition is made to the Ārādhanā texts so far published.

Lastly, I would be failing in my duty, if I did not record my sincere gratitude to the University Grants Commission, New Delhi, for having so graciously made me the grant intended for Retired Teachers. It is this timely aid that has enabled me, even after retirement, to pursue my researches in my specialised branches of Indology with the peace of mind all such work needs :

karmaṇyevādhikāras te.

Dhavalā :
VIII, Rajarampuri,
Kolhapur : 15-10-1965

*A. N. Upadhye*

# विषयानुक्रमणिका



■

❀ श्री-पञ्चगुरुभ्यो नमः ❀

श्री-रविचन्द्र-मुनीन्द्र-विरचितः

# आराधनासमुच्चयः

1. सम्यग्दर्शनबोधनचरित्ररूपान्प्रणम्य पञ्चगुरून् ।
आराधनासमुच्चयमागमसारं प्रवक्ष्यामः ॥ १ ॥

2. आराध्याराधकजनसोपायाराधनाफलाख्यं तु ।
पादचतुष्टयमेतत्समुदितमाराधनासिद्ध्यै ॥ २ ॥

3. तत्राराध्यं गुणगुणिभेदाद् द्विविधं गुणाश्च चत्वारः ।
सम्यग्दर्शनबोधनचरिततपो नाम समुपेताः ॥ ३ ॥

4. आप्तागमतत्त्वार्थश्रद्धानं तेषु भवति सम्यक्त्वम् ।
व्यपगतसमस्तदोषः सकलगुणात्मा भवेदाप्तः ॥ ४ ॥

5. आप्तोक्ता वागागमसंज्ञा नानाप्रमाणनयगहना ।
स्यादागमप्ररूपितरूपयुतार्था हि तत्त्वार्थाः ॥ ५ ॥

6. क्षुत्तृड्भीक्रुधरागप्रमोहचिन्ताजराजामृत्यु- ।
खेदस्वेदमदारतिविस्मयनिद्राजन्मोद्वेगाः ॥ ६ ॥

7. दोषास्तेषां हन्ता केवलबोधादयो गुणास्तेषाम् ।
आधारः स्यादाप्तस्तद्विपरीतः स्यादनाप्तः ॥ ७ ॥ युग्मम् ॥

8. तदुक्तत्वात् पूर्वापरविरोधरूपादिदोषनिर्मुक्तः ।
स्यादागमस्तु तत्प्रतिपक्षोक्तिरनागमो नाम ॥ ८ ॥

9. जीवाजीवौ धर्माधर्मौ कालाकाशे च षडपि तत्त्वार्थाः ।
नानाधर्माक्रान्ता नेतररूपाः कदाचिदपि ॥ ९ ॥
10. सम्यग्दर्शनचिह्नं चित्ते प्रशमादिकं विजानीयात् ।
त्रिविकल्पं तदपि भवेदुपशममिश्रक्षयजभेदात् ॥ १० ॥

उक्तं च ।

10*1. तत्सरागं विरागं च द्विधौपशमिकं तथा ।
क्षायिकं वेदकं त्रेधा दशधाज्ञादिभेदतः ॥ इति ॥
11. तेषूपशमजसम्यग्दर्शनमुत्पत्तितो द्विधा भवति ।
मिथ्यादृष्टेराद्यं वेदकसम्यग्दृशो ह्यन्यत् ॥ ११ ॥
12. मिथ्यादृष्टिर्भव्यो द्विविधः संज्ञी समाप्तपर्याप्तिः ।
लब्धिचतुष्टययुक्तोऽत्यन्तविशुद्धश्चतुर्गतिजः ॥ १२ ॥
13. आप्रदवस्थावस्थः साकारात्मोपयोगसंयुक्तः ।
योग्यस्थित्यनुभवभाक् सल्लेश्याबृद्धियुक्तश्च ॥ १३ ॥
14. त्रिकरणशुद्धिं कृत्वाप्यन्तरमुत्पादितत्रिदृग्मोहः ।
गृह्णात्याद्यं दर्शनमनन्तसंसारविच्छेदी ॥ १४ ॥ त्रिकम् ॥
15. शुद्धं वा मिश्रं वा विरतिभ्यां कर्मभूमिजः शुद्धम् ।
शेषः क्षायिकदर्शनवत्तावत् कलुषताभावात् ॥ १५ ॥
16. परिहारमनःपर्ययबोधाहारर्द्धिजननमरणाद्यैः ।
रहितं तत्तत्कालो द्विविधोऽप्यन्तर्मुहूर्तः स्यात् ॥ १६ ॥
17. तत्कालस्यान्तर्यदि विराधितो वै भवेद् द्वितीयगुणः ।
नो चेद्दर्शनमोहत्रितयान्यतरोदयं याति ॥ १७ ॥
18. कालो द्वितीयगुणिनो ह्यपरः समयः परः षडावलिकः ।
मिथ्यात्वेऽसौ पतति तु भूम्यामिव गिरिशिरस्स्खलितः ॥ १८ ॥
19. सासादनस्य नरकेषूत्पत्तिर्नास्ति मरणमप्यनये ।
ह्येकविकलेन्द्रियेषूत्पत्तिरिहाचार्यमतभेदात् ॥ १९ ॥

20. अथ मिथ्यात्वोदयगो जघन्यतोऽन्तर्मुहूर्तमुत्कर्षात् ।
पुद्गलपरिवर्तार्धं तिष्ठति तद्द्विविधपरिणामैः ॥ २० ॥
21. द्वित्रिचतुःपञ्चादिप्रभेदतस्तद्भवेदनेकविधम् ।
कुगतिगमनैकमूलं मिथ्यात्वं भवति जीवानाम् ॥ २१ ॥
22. अथ सम्यक्मिथ्यात्वं गतवांस्तस्योदयोत्थितैर्भावैः ।
मिश्रश्रद्धानकरैः क्षायोपशमाह्वयैरास्ते ॥ २२ ॥
23. अन्तर्मुहूर्तकालं तद्भवमरणादिवर्जितस्तस्मात् ।
च्युतवान् दर्शनमोहद्वितयान्यतरोदयमुपैति ॥ २३ ॥ युग्मम् ॥
24. अथ सम्यक्त्वं प्राप्तस्तत्कर्मोदयभवैश्च परिणामैः ।
क्षायोपशमिकसंज्ञैः शिथिलश्रद्धानजैर्वसति ॥ २४ ॥
25. अन्तर्मुहूर्तकालं जघन्यतस्तत्प्रयोग्यगुणयुक्तः ।
षट्षष्टिसागरोपमकालं चोत्कर्षतो विधिना ॥ २५ ॥ युग्मम् ॥

उक्तं च ।

25*1. लांतवकप्पे तेरस अच्चुदकप्पे य होंति बावीसा ।
उवरिम एक्कत्तीसं एवं सव्वाणि छावट्ठी ॥ इति ॥
26. वेदकसम्यग्दृष्टिर्वाञ्छन्नारोढुमुपशमश्रेणीम् ।
प्रथमकषायान्करणैराचार्यमतेन विनियोज्य ॥ २६ ॥
27. त्रिकरण्या दृङ्मोहत्रितयं प्रशमय्य याति चोपशमम् ।
सम्यक्त्वमुपशमश्रेणीनिभकालप्रवेशाख्याम् ॥ २७ ॥
28. उपशमकश्रेणिं तेनारुह्य ततोऽवतीर्य वा म्रियते ।
जननं लेश्यावशतो निवारितर्द्धीश्च समुपैति ॥ २८ ॥ त्रिकम् ॥
29. अविरतसम्यग्दृष्ट्याद्येषु चतुर्ष्वपि गुणेषु कस्मिंश्चित् ।
वेदकदृष्टिस्त्रिकरण्यादिकषायान् विसंयोज्य ॥ २९ ॥
30. निर्वृतियोग्ये क्षेत्रे काले लिङ्गे भवे तथा वयसि ।
शुभलेश्यात्रयवृद्धिं कषायहानिं च संविदधत् ॥ ३० ॥

31\. क्षपकश्रेणीसदृशप्रवेशकालान्तरैस्त्रिभिः करणैः ।
हत्वा दृङ्मोहत्रयमाप्नोति क्षायिकीं दृष्टिम् ॥ ३१ ॥ त्रिकम् ॥

32\. क्षायिकसम्यग्दर्शनमाप्तोक्तार्थेषु निश्चलात्मरुचिः ।
वातैर्मन्दरगिरिवन्न विचलति कुहेतुदृष्टान्तैः ॥ ३२ ॥

33\. उत्पद्यते हि वेदकदृष्टिः स्वमरेषु कर्मभूमिनृषु ।
कृतकृत्यक्षायिकदृग्बद्धायुष्कश्चतुर्गतिषु ॥ ३३ ॥

34\. षट्सु वधः पृथ्वीषु ज्योतिर्वनभवनजेषु च स्त्रीषु ।
विकलैकेन्द्रियजातिषु सम्यग्दृष्टेर्न चोत्पत्तिः ॥ ३४ ॥

35\. बद्धायुष्यचतुष्कोऽप्युपैति सम्यक्त्वमुदितभेदयुतम् ।
विरतिद्वितयं बद्धः स्वर्गायुष्यात्परं नैव ॥ ३५ ॥

36\. पुद्गलपरिवर्तार्धं परतो व्यालीढवेदकोपशमौ ।
वसतः संसाराब्धौ क्षायिकदृष्टिर्भवचतुष्कः ॥ ३६ ॥

37\. अथवा द्वेधा दशधा बहुधा सम्यक्त्वमूनमेतेन ।
ज्ञानचरित्रतपो वै नालं संसारमुच्छेत्तुम् ॥ ३७ ॥

38\. वृक्षस्य यथा मूलं प्रासादस्य च यथा ह्यधिष्ठानम् ।
विज्ञानचरिततपसां तथा हि सम्यक्त्वमाधारः ॥ ३८ ॥

39\. दर्शननष्टो नष्टो न तु नष्टो भवति चरणतो नष्टः ।
दर्शनमपरित्यजतां परिपतनं नास्ति संसारे ॥ ३९ ॥

40\. त्रैलोक्यस्य च लाभाद्दर्शनलाभो भवेत्तरां श्रेष्ठः ।
लब्धमपि त्रैलोक्यं परिमितकाले यतश्च्यवते ॥ ४० ॥

41\. निर्वाणराज्यलक्ष्म्याः सम्यक्त्वं कण्ठिकामतः प्राहुः ।
सम्यग्दर्शनमेव निमित्तमनन्ताव्ययसुखस्य ॥ ४१ ॥

॥ इति सम्यग्दर्शनाराधना ॥ १ ॥

42. दर्शयति स्वपदार्थान्यज्ज्योतिः प्रकाशवत्स्वज्ञानात् ।
पूर्वमनाकारं तच्चैतन्यं दर्शनं विन्द्यात् ॥ १ ॥

43. तच्चक्षुरादिदर्शनभेदात्प्रविकल्प्यमानमाप्नोति ।
चातुर्विध्यमनेकप्रभेदसंदोहसंयुक्तम् ॥ २ ॥

44. चक्षुर्ज्ञानात्पूर्वं प्रकाशरूपेण विषयसंदर्शी ।
यच्चैतन्यं प्रसरति तच्चक्षुर्दर्शनं नाम ॥ ३ ॥

45. शेषेन्द्रियावबोधात् पूर्वं तद्विषयदर्शि यज्ज्योतिः ।
निर्गच्छति तदचक्षुर्दर्शनसंज्ञं स्वचैतन्यम् ॥ ४ ॥

46. अवधिज्ञानात्पूर्वं रूपिपदार्थावभासि यज्ज्योतिः ।
प्रविनिर्याति स्वस्मान्नाम्नावधिदर्शनं तत्स्यात् ॥ ५ ॥

47. केवलबोधनविषयप्रकाशि यज्ज्योतिरात्मनो निःसृतम् ।
तत्केवलदर्शनमिति वदन्ति निःशेषतत्त्वविदः ॥ ६ ॥

48. दृक्पूर्व एव बोधः कारणकार्यत्वदर्शनात्तु तयोः ।
तदपि च्छद्मस्थानां क्रमोपयोगप्रवृत्तेः स्यात् ॥ ७ ॥

49. केवलदर्शनबोधौ समस्तवस्तुप्रभासिनौ युगपत् ।
दिनकृत्प्रकाशतापवदावरणाभावतो नित्यम् ॥ ८ ॥

50. चतुरिन्द्रियादिनष्टकषायान्तं प्रथमदर्शनं विन्द्यात् ।
एकेन्द्रियादिनष्टकषायान्तं स्याद् द्वितीयं च ॥ ९ ॥

51. अविरतसम्यग्दृष्ट्याद्या क्षीणकषायमवधिदर्शनकम् ।
केवलिनोः सिद्धानां चतुर्थकं स्यादिति प्राहुः ॥ १० ॥

52. प्रथमतृतीये कालः सादिः सान्तो द्वितीयकेऽनादिः ।
सान्तोऽनन्तश्च भवेच्चतुर्थके साद्यनन्तः स्यात् ॥ ११ ॥

53. जानाति यत्पदार्थान् साकारं निश्चयेन तज्ज्ञानम् ।
ज्ञायन्ते वा येन ज्ञप्तिर्वा तत्प्रमाणाख्यम् ॥ १२ ॥

54. तद् वै मतिश्रुतावधिमनःपर्ययकेवलाख्यभेदेन ।
भिन्नं पञ्चविकल्पं भवतीति वदन्ति विद्वांसः ॥ १३ ॥

55. इन्द्रियमनोभिरभिमुखनियमितरूपेण वस्तुविज्ञानम् ।
भवति मतिज्ञानं तत् षट्त्रिंशत् त्रिशतभेदयुतम् ॥ १४ ॥

56. इन्द्रियमनसां षण्णां प्रत्येकमवग्रहादयो भेदाः ।
चत्वारस्तत्राद्यो द्विविधोऽर्थव्यञ्जनविकल्पात् ॥ १५ ॥

57. चक्षुर्मनसोर्नास्ति व्यञ्जनभेदः पृथक् पृथक् तेषाम् ।
बहुबहुविधादिभेदाद् द्वादश निर्दर्शितास्तज्ज्ञैः ॥ १६ ॥

58. अथवा द्वित्रिचतुःपञ्चादिविकल्पैर्विकल्प्यमानं तत् ।
संख्यातासंख्यातप्रभेदसंघातमाप्नोति ॥ १७ ॥

59. निष्पतदन्तर्ज्योतिर्बलमतिविभवप्रभाषितादर्थात् ।
अर्थान्तरविज्ञानं श्रुतविज्ञानं विजानीयात् ॥ १८ ॥

60. पर्यायाक्षरपदसंघातादिविकल्पभिद्यमानं तत् ।
विंशतिभेदं भवतीत्याहुर्विश्वार्थतत्त्वज्ञाः ॥ १९ ॥

61. यत्तु जघन्यं ज्ञानं सूक्ष्मैकेन्द्रियजलब्ध्यपर्याप्तेः ।
तल्लब्ध्यक्षरसंज्ञं पर्यायाख्यं निरावरणम् ॥ २० ॥

62. तस्योपरि षड्वृद्धिषु पर्यायसमासनामयुक्तानि ।
ज्ञानानि संभवन्ति हि संख्यातीतानि तेष्वन्त्यात् ॥ २१ ॥

63. ज्ञानादनन्तगुणविज्ञानं कैवल्यबोधसंख्येय–।
भागप्रमाणमक्षरविज्ञानं कथ्यतेऽर्हद्भिः ॥ २२ ॥ युग्मम् ॥

64. एकाक्षरादिवृद्ध्या वृद्धास्तस्योपरि क्रमेणैते ।
ह्यक्षरसमासबोधाः संख्येयाः संभवन्त्येवम् ॥ २३ ॥

65. संख्येयाक्षरजनितं पदविज्ञानं वदन्ति विश्वज्ञाः ।
प्राग्वत्तदुपरि वृद्धा बोधाः स्युः पदसमासाख्याः ॥ २४ ॥

66. संघातादिज्ञानान्यापूर्वसमाससमुक्तया वृद्ध्या ।
ज्ञेयान्येवं भव्यैः सर्वज्ञाज्ञाविधानेन ॥ २५ ॥

67. अक्षरजमनक्षरजं चेति द्विविधं समासतस्तत्स्यात् ।
द्विविधं चाक्षरसंभवमङ्गानङ्गप्रभेदेन ॥ २६ ॥
68. आचारादिविकल्पाद् द्वादशभेदात्मकं भवेत्प्रथमम् ।
सामायिकादिभेदादितरच्च चतुर्दशविकल्पम् ॥ २७ ॥
69. मतिजश्रुतजे ज्ञाने सदृशे ते सर्वदाप्यविच्छेदात् ।
तद् द्वितयमपि परोक्षं मतिजं व्यवहारतोऽप्यक्षम् ॥ २८ ॥
70. रूपिद्रव्यनिबद्धं देशप्रत्यक्षमवधिविज्ञानम् ।
देशावधिपरमावधिसर्वावधिभेदतस्त्रिविधम् ॥ २९ ॥
71. देशावधिविज्ञानं भवगुणकारणतया द्विधा भवति ।
तत्रैकैकं त्रिविधं जघन्यमध्योत्तमविकल्पात् ॥ ३० ॥
72. द्रव्यं क्षेत्रं कालं भावं च प्रति जघन्यमध्यपरम् ।
मध्यमसंख्यातविधं शेषद्वितयं तदेकैकम् ॥ ३१ ॥
73. गुणकारणजं तिर्यङ्मर्त्येषु विकल्पतस्तु षड्भेदम् ।
भवकारणजं नारकदेवेषु बहुप्रभेदं तत् ॥ ३२ ॥
74. प्रादेशिकं तु गौण्यं भवकारणमविकलात्मदेशभवम् ।
प्रतिपाति लोकमात्रं ह्यप्रतिपाति तु ततोऽभ्यधिकम् ॥ ३३ ॥
75. गुणकारणस्य नाभेरुपरि भवन्ति हि शुभानि चिह्नानि ।
श्रीवृक्षादीनि स तैर्नेत्रेणेव स्फुटं पश्येत् ॥ ३४ ॥

उक्तं च ।

75*1. उत्पद्यतेऽथ मिथ्यागुणजस्य विभङ्गसंज्ञको जन्तोः ।
नाभेरधस्थदर्दुरकाकोलूकाद्यशुभचिह्नात् ॥ इति ॥
76. परमावधिविज्ञानं चरमशरीरस्य संयतस्य भवेत् ।
पूर्ववदेतत् त्रिविधं द्रव्यक्षेत्राद्यमाश्रित्य ॥ ३५ ॥
77. उत्कृष्टजघन्यद्वयमेकैकविकल्पमेव जानीयात् ।
मध्यमजाताभेदा भवन्त्यसंख्येयसंघाताः ॥ ३६ ॥

78. सर्वावधिविज्ञानं विरामदेहस्य संयतस्यैव ।
प्रादुर्भवति स जानात्यणुमुचितक्षेत्रकालाद्यैः ॥ ३७ ॥

79. आद्यं विज्ञानत्रयमुदितं मिथ्यात्वकर्मणो ह्युदयात् ।
विपरीतरूपमाप्तं मत्यज्ञानादि नाम स्यात् ॥ ३८ ॥

80. अर्थानां याथात्म्याग्रहणात्संज्ञानमेव चाज्ञानम् ।
युक्ताचाराभावात् पुत्रस्यापुत्रसंज्ञावत् ॥ ३९ ॥

81. अन्यमनोगतविषयः स्वचेतसा संविलोक्यते येन ।
तद्धीपर्ययबोधनमृजुविपुलविकल्पतो द्विविधम् ॥ ४० ॥

82. ऋजुधीपर्ययबोधनमुत्तममध्यमजघन्यतस्त्रिविधम् ।
मध्यमनेकविकल्पं श्रेष्ठजघन्यद्वयमभेदम् ॥ ४१ ॥

83. विपुलमनःपर्ययमपि जघन्यमध्योत्तमाख्यया त्रिविधम् ।
निर्भेदमुत्तमाधममनेकभेदात्मकं मध्यम् ॥ ४२ ॥

84. एतानि ज्ञानानि स्वावरणानां क्षयोपशमजानि ।
केवलमशेषवस्तुस्वरूपसंवेदि तत् क्षयजम् ॥ ४३ ॥

85. सामान्यविशेषात्मकवस्तुग्रहणात्प्रमाणमेतद्धि ।
नय एकांशग्रहणाद् दुर्नय इतरांशनिर्लोपात् ॥ ४४ ॥

॥ इति सम्यग्ज्ञानाराधना ॥ २ ॥

86. प्राणीन्द्रियेषु षड्विधभेदेषु हि संयमश्चरित्रं तु ।
सामायिकादिभेदात्पञ्चविधं तद्विजानीयात् ॥ १ ॥

87. सावद्ययोगविरतिः सर्वव्रतसमितिगुप्तिधर्माद्यैः ।
भेदै रहितापि युता सामायिकसंयमो नाम ॥ २ ॥

88. व्रतसमितिगुप्तिसंयमशीलगुणादिकविकल्पसंयुक्ताम् ।
विरतिं वदन्ति सन्तश्छेदोपस्थापनाचरितम् ॥ ३ ॥

89. त्रिविधविकल्पसमन्वितसूक्ष्मासंख्येयलोकपरिणामैः ।
सदृशे ते चारित्रे व्यतिरेकाभावतो नित्यम् ॥ ४ ॥

90. त्रिंशद्वर्षाद् योगी वर्षपृथक्त्वं च तीर्थंकरमूले ।
प्रत्याख्यानमधीत्य च गव्यूति द्वितयगो दिवसे [ ? ] ॥ ५ ॥

91. संयमविनाशभीरुर्लभते परिहारसंयमं शुद्धम् ।
त्रिविधास्तत्परिणामा भवन्त्यसंख्यातसंख्यानाः ॥ ६ ॥

92. परिहारार्द्धिसमेतः षड्जीवनिकायसंकुले विचरन् ।
पयसेव पद्मपत्रं न लिप्यते पापनिवहेन ॥ ७ ॥

93. सूक्ष्मीकृते तु लोभकषाये श्रेणिद्वये निवृत्तिमयैः ।
परिणामैर्भवति यतेः सूक्ष्मचरित्रं गुणपवित्रम् ॥ ८ ॥

94. मोहानुदयादेकाकारमनोगुणचतुष्टये नियम् ।
उपशान्तकषायाद्ये भवति चरित्रं यथाख्यातम् ॥ ९ ॥

95. आद्ये चरित्रे स्यातां प्रमत्तमुख्येषु वै गुणेषु चतुर्षु ।
परिहारर्द्धिर्गुणयोर्द्वयोः प्रमत्ताद्ययोरेव ॥ १० ॥

96. आद्यचरित्रद्वितयं ह्युपशममिश्रक्षयैर्भवेन्मध्यम् ।
क्षायोपशमिकमन्त्यं चोपशमक्षयभवं द्वितयम् ॥ ११ ॥

97. क्षायोपशमिकमन्यद् देशचरित्रं तु पञ्चमे तु गुणे ।
नानापरिणामे गुणचतुष्टये विरतिकौदयिको ॥ १२ ॥

98. आद्येषु त्रिषु चरितेष्वपरः समयः परो भवेत्कालः ।
देशोनपूर्वकोटी प्रतीत्य भृशमेकजीवं तु ॥ १३ ॥

99. अन्तर्मुहूर्तसमयौ परावरौ सूक्ष्मसांपरायाख्ये ।
देशोनपूर्वकोटिः समयश्च विरागचारित्रे ॥ १४ ॥

100. अन्तर्मुहूर्तमपरं देशचरित्रे वदन्ति कालं हि ।
देशोनुपूर्वकोटीमुत्कृष्टं विश्वतत्त्वज्ञाः ॥ १५ ॥

101. अन्तर्मुहूर्तमङ्गत्रितयौ हीनोत्तमावविरतौ तु ।
नानाजीवापेक्षा सर्वाद्धा सूक्ष्मरहितेषु ॥ १६ ॥

॥ इति सम्यक्चारित्राराधना ॥ ३ ॥

102. इन्द्रियमनसोर्दर्पप्रणाशकं वर्तनं तपो नाम ।
बाह्याभ्यन्तरभेदाद् द्विविधं तत्प्राहुरार्षज्ञाः ॥ १ ॥
103. बाह्यं षडात्मकं स्यादनशनकादीनि तदभिधानानि ।
साकांक्षमनाकांक्षं चेत्यनशनमभिमतं द्वेधा ॥ २ ॥
104. द्रव्यक्षेत्रादिवशात् साकांक्षमनेकभेदसंयुक्तम् ।
त्रिविधमनाकांक्षमपि प्रायोपगमादिभेदेन ॥ ३ ॥
105. स्वपरव्यापृतिरहितं मरणं प्रथमं द्वितीयमात्मभवम् ।
व्यापारयुतं चान्त्यं स्वपरव्यापारसंयुक्तम् ॥ ४ ॥
106. यत्साम्यशनं तत्स्यादवमोदर्यं तपः सुबहुभेदम् ।
रसरहितौदनभुक्तिर्नानाभेदो रसत्यागः ॥ ५ ॥
107. भिक्षासमुत्थकांक्षारोधो नानाथ वृत्तिपरिसंख्या ।
योगैरनेकभेदैः कायक्लेशोऽङ्गसंतपनम् ॥ ६ ॥
108. स्त्रीपश्वादिविवर्जितदेशे शुद्धे निवसनमध्ययन- ।
ध्यानादिविवृद्धयर्थं विविक्तशयनासनं षष्ठम् ॥ ७ ॥
109. बाह्यजनज्ञातत्वाद् बाह्येन्द्रियदर्पनाशकरणाच्च ।
मार्गप्रभावनाकरमेतद् बाह्यं तपो नाम ॥ ८ ॥
110. आभ्यन्तरं च षोढा प्रायश्चित्तादिभेदतो भवति ।
दश पञ्चदश च पञ्च च चत्वारो द्वौ च तद्भेदाः ॥ ९ ॥
111. कृतदोषस्य निवृत्तिं प्रायश्चित्तं वदन्ति सकलविदः ।
आलोचनादयस्तद्भेदा दश सम्यगवगम्याः ॥ १० ॥
112. त्रिकरणशुद्धया नीचैर्वृत्तिर्विनयं सदाभिपूज्येषु ।
सम्यक्त्वाद्याश्रयणात् पञ्चविधः सोऽपि विज्ञेयः ॥ ११ ॥
113. व्यापदि यत् क्रियते तत् वैयावृत्यं स्वशक्तिसारेण ।
आचार्यादिसमाश्रयवशतो दशधा विकल्प्यं तत् ॥ १२ ॥
114. स्वध्ययनमागमस्य स्वाध्यायाख्यं तपस्ततो मुख्यम् ।
परिवर्तनादिभेदात्पञ्चविधं तद्वदन्त्यार्याः ॥ १३ ॥

115. उत्तमसंहननस्यैकाग्रजचिन्तानिरोधनं ध्यानम् ।
    अन्तर्मुहूर्तकालं धार्तादिचतुःप्रकारयुतम् ॥ १४ ॥
116. इतरत्रिकसंहननस्यास्थिरपरिणामसंयुतस्यापि ।
    स्वादाशादिकचिन्ता हेतुद्वितये च परिणामः ॥ १५ ॥
117. अर्तिर्दुःखं तस्यां ध्यानमार्तंनाम भवेत् ।
    स्वेष्टवियोगाद्युद्भवभेदेन चतुर्विकल्पं तत् ॥ १६ ॥
118. स्वेष्टवियोगादौ सति हेतौ बाह्येऽपनीतये तस्य ।
    बुद्धिसमन्वाहारे ह्यार्तध्यानानि चत्वारि ॥ १७ ॥
119. रुद्रः क्रूरस्तस्मिन्समुद्भवं रौद्रनामकं ध्यानम् ।
    भवति चतुर्विधमेतत् हिंसानन्दादिभेदेन ॥ १८ ॥
120. हिंसादीनां बाह्ये हेतौ सति तत्प्रसिद्धये स्थिरके ।
    बुद्धिसमन्वाहारे रौद्रध्यानानि चत्वारि ॥ १९ ॥
121. धर्मसहचारिपुरुषो धर्मस्तत्कर्मधर्म्यनाम स्यात् ।
    ध्यानं चतुर्विधं तद्यथाज्ञाविचयादिभेदेन ॥ २० ॥
122. आज्ञेत्यागमसंज्ञा तदुदिताशेषवस्तुसंदोह- ।
    गुणपर्यायविचिन्तनमाज्ञाविचयाह्वयं ध्यानम् ॥ २१ ॥
123. ज्ञानावरणादीनामपायसंचिन्तनं स्थिरत्वेन ।
    विद्यादपायविचयं ध्यानं नानाप्रभेदं तत् ॥ २२ ॥
124. बन्धादिभिर्विकल्पैश्चतुर्विधो दुरितसंकुलापायः ।
    प्रकृतिस्थित्याद्यैरपि तत्रैकैकं चतुर्भेदम् ॥ २३ ॥
125. षोडशकपञ्चविंशतिदशकचतुष्षट्कस्यैकषट्त्रिंशत् ।
    पञ्चकषोडशकैकं बन्धापाया गुणेषूक्ताः ॥ २४ ॥
126. सैकद्विषोडशत्रिंशद् द्वादश चात्रोदयापायाः ।
    दशचतुरेकं सप्तादशाष्टपञ्चकचतुष्कषट्षट्कम् ॥ २५ ॥
127. दशचतुरेकं सप्तादशाष्टकाष्टकचतुष्कषट्षट्कम् ।
    सैकद्विषोडशैकोना चत्वारिंशद् विपाकाः ॥ २६ ॥

128. सप्ताष्टषोडशैकैकं षट्कैकैकमेकमेकैकम् ।
षोडशपञ्चाशीतिः सत्त्वापायास्तु दुरितानाम् ॥ २७ ॥

129. दुरितानां तु शुभाशुभभेदानां पाकजातसुखदुःख- ।
भेदप्रभेदचिन्ताविपाकविचयाख्यधर्म्यं तु ॥ २८ ॥

130. तीर्थकृदिन्द्ररथाङ्गभृदादिसुखं पुण्यकर्मसंपाकः ।
नारकतिर्यक्नॄणां दुःखं दुष्कर्मपाकस्तु ॥ २९ ॥

131. द्वादशधा गदितानुप्रेक्षा संचिन्तनं वदन्त्यार्याः ।
संस्थानविचयनामध्यानमनेकप्रभेदसंयुक्तम् ॥ ३० ॥

132. अध्रौव्याशरणैकत्वान्यत्वकमाजवंजवीलोकोऽ- ।
शुचिताश्रवसंवरणं निर्जरणं धर्मबोधि च ध्येयम् ॥ ३१ ॥

133. ध्रौव्याध्रौव्याद्यात्मन्यर्थेऽनेकान्तवादसंश्रयणात् ।
नर्ते घटते नष्टं रूपं वक्तुर्विवक्षायाम् ॥ ३२ ॥

134. भुवनत्रितये पुण्योदर्कजवस्तूनि यानि दृश्यन्ते ।
तान्यनिलाहतदीपशिखावत्सर्वाण्यनित्यानि ॥ ३३ ॥

135. इन्द्रादिनिलिम्पानामष्टगुणैश्वर्यसंयुता संपत् ।
शारदशुभ्रादभ्रोत्करविभ्रमनिभा शेषा ॥ ३४ ॥

136. चक्रधरादिनराणां संपत्तिरनेकभोगवल्लकलिता ।
रत्ननिधिनिवहपूर्णा करीन्द्रकर्णाग्रवच्चपला ॥ ३५ ॥

137. रूपं कान्तिस्तेजो यौवनसौभाग्यभाग्यमारोग्यम् ।
विभ्रमविलासलावण्यादिकमचिरांशुलसनाभम् ॥ ३६ ॥

138. आत्मन्येकीभूतः कायोऽप्यमरेन्द्रचापवत्सहसा ।
प्रविलीयते किमन्यत् कर्मकृतं दृश्यते नित्यम् ॥ ३७ ॥

139. जलबुद्बुदेन्द्रचापक्षणरुच्यादीनि नित्यतां नेतुम् ।
शक्यन्ते देवाद्यैर्न कर्मजनितानि वस्तूनि ॥ ३८ ॥

। इत्यध्रुवानुप्रेक्षा ।

140. दुष्कर्मपाकसंभवजन्मजरामरणरोगशोकादि- ।
संपाते शरणं नो जगत्त्रये विद्यते किंचित् ॥ ३९ ॥

141. स्वर्गो दुर्गं वज्रं प्रहरणमैरावणो गजो भृत्याः ।
गीर्वाणा देवेशः शरणं नो किं परेषु वचः ॥ ४० ॥

142. बहुजात्याश्वमदद्विपरथनायकबलरथाङ्गशस्त्रादि- ।
चक्रेशः शरणं मर्त्येषु परेषु का वार्ता ॥ ४१ ॥

143. किञ्जल्कपुञ्जपिञ्जरगुञ्जज्जलविकरराजिताब्जवनम् ।
मदकुञ्जरवदवार्यो मृत्युर्मृद्नाति भुवनमिदम् ॥ ४२ ॥

144. यद्वन्न शरणमुग्रद्विपविद्विडवदनवर्तिहरिणशिशोः ।
तद्वन्न शरणमन्तकदन्तान्तरवर्तिजनतायाः ॥ ४३ ॥

। इत्यशरणानुप्रेक्षा ।

145. एको गर्भार्भकनवयौवनमध्यत्ववृद्धतावस्थाः ।
व्याधिभयमरणशोकव्यायासाननुभवत्यात्मा ॥ ४४ ॥

146. विविधसुखदुःखकारणशुभाशुभाख्यानकर्मसंघातम् ।
स्वनिमित्तवशादेको बध्नाति विचित्रपरिणामैः ॥ ४५ ॥

147. दृग्बोधनादिगुणरूपात्मा कर्माष्टकं निमित्ताभ्याम् ।
उन्मूल्य समूलं स्वयमुपैति निर्वाणसुखमेकः ॥ ४६ ॥

। इत्येकत्वानुप्रेक्षा ।

148. मातृपितृपुत्रपौत्रभ्रातृकलत्रादिबन्धुतां कर्म ।
योजयति वियोजयति च मारुत इव जीर्णपर्णानि ॥ ४७ ॥

149. अन्योऽन्योऽयं प्राणी मोहोदयविह्वलीकृतोऽन्यस्य ।
शोके हर्षे जाते करोति वत शोकहर्षौ च ॥ ४८ ॥

150. कार्येण जनस्य जनः शत्रुर्मित्रं च भवति लोकेऽस्मिन् ।
भिन्नस्वभावकोऽयं सिकतामुष्टिवदशेषजनः ॥ ४९ ॥
151. ज्ञानादिगुणप्रकृतिकजीवद्रव्यात्परं स्वकायादि ।
यद् दृश्यते समस्तं तदन्यदिति बुद्धिमत्तत्त्वम् ॥ ५० ॥

। इत्यन्यत्वानुप्रेक्षा ।

152. पञ्चविधे संसारे कर्मवशाज्जैनदेशितं मुक्तेः ।
मार्गमपश्यन्प्राणी नानादुःखाकुले भ्रमति ॥ ५१ ॥
153. सर्वेऽपि पुद्गलाः खल्वेकेनात्तोज्झिताश्च जीवेन ।
ह्यसकृत्वनन्तकृत्वः पुद्गलपरिवर्तसंसारे ॥ ५२ ॥
154. सर्वत्र जगत्क्षेत्रे देशो न ह्यस्ति जन्तुनाक्षुण्णः ।
ह्यवगाहनानि बहुशो बंभ्रमता क्षेत्रसंसारे ॥ ५३ ॥
155. उत्सर्पणावसर्पणसमयावलिकासु निरवशेषासु ।
जातो मृतश्च बहुशः परिभ्रमन्कालसंसारे ॥ ५४ ॥
156. नरकजघन्यायुष्याद्युपरिग्रैवेयकावसानेषु ।
मिथ्यात्वसंश्रितेन हि भवस्थितिर्भाविता बहुशः ॥ ५५ ॥
157. सर्वप्रकृतिस्थित्यनुभागप्रदेशबन्धयोग्यानि ।
स्थानान्यनुभूतानि भ्रमता भुवि भावसंसारे ॥ ५६ ॥

। इति संसारानुप्रेक्षा ।

158. जीवाद्यर्था यस्मिन् लोक्यन्तेऽसौ निरुच्यते लोकः ।
सोऽधो मध्योर्ध्वभिदा त्रेधा बहुधा प्रभेदैः स्यात् ॥ ५७ ॥
159. स्यात्सुप्रतिष्ठकाकृतिरनादिनिधनात्मको ह्यधः सदृशः ।
वेत्रासनेन मध्यं झल्लर्योर्ध्वं मृदङ्गेन ॥ ५८ ॥
160. सप्ताधो नरकाः स्युर्मध्ये द्वीपाम्बुराशयोऽसंख्याः ।
स्वर्गास्त्रिषष्टिभेदा निर्वाणक्षेत्रमत्रोर्ध्वम् ॥ ५९ ॥

161. अत्युष्णशीतकर्कशरूक्षाशुचिरतिविरसदुर्गन्धि- ।
भूमिषु नरकेषूग्रं दुःखं प्राप्नोति पापिजनः ॥ ६० ॥

162. छेदनभेदनताडनबन्धनविशसनविलम्बनं तपन- ।
ज्वलनादिकर्म सततं प्रकुर्वते नरकिणोऽन्योन्यम् ॥ ६१ ॥

163. एकद्वित्रिचतुःपञ्चेन्द्रियसंज्ञाश्च जगति तिर्यञ्चः ।
दुःखमनेकविकल्पं पापोदर्कादनुभवन्ति ॥ ६२ ॥

164. मनुजेषु पापपाकाद् दुःखमनेकप्रकारमाप्नोति ।
प्राणिगणः पुण्यवशादभ्युदयसुखानि विविधानि ॥ ६३ ॥

165. शुद्धाशुद्धचरित्रैर्नानाभेदोच्चनीचनिलयेषु ।
संभूतो देवगणः सौख्यमनो दुःखमनुभवति ॥ ६४ ॥

166. मर्त्यक्षेत्रसमाने श्वेतच्छत्रोपमे जगच्छिखरे ।
स्वोत्थं सौख्यमनन्तं विध्वस्ताघो जनो भजते ॥ ६५ ॥

। इति लोकानुप्रेक्षा ।

167. अशुचितमशुक्रशोणितसंभूतं छर्दिवाससंवृद्धम् ।
दोषमलधातुनिलयः कथं शरीरं वद शुचीदम् ॥ ६६ ॥

167*1-2. उक्तं च श्लोकद्वयम् ।

रसाद् रक्तं ततो मांसं मांसान्मेदः प्रवर्तते ।
मेदसोऽस्थि ततो मज्जा मज्जाशुक्रं ततः प्रजाः ॥
वातं पित्तं तथा श्लेष्म सिरा स्नायुश्च चर्म च ।
जठराग्निरिति प्राज्ञैः प्रोक्ताः सप्तोपधातवः ॥ इति ॥

168. अस्थिघटितं सिरासंबद्धं चर्मावृतं च मांसेन ।
व्यालिप्तं किल्बिषवसु कथं नु शुचि देहगेहमिदम् ॥ ६७ ॥

169. शुचिसुरभिपूतजलमाल्याम्बरगन्धाक्षतादिवस्तूनि ।
स्पर्शेनाशुचिभावं नयति कथं शुचि भवेदङ्गम् ॥ ६८ ॥

170. मक्षिकपत्रसमानं यदि चर्माङ्गस्य भवति नो काये ।
द्रष्टुं स्प्रष्टुं काकादिभ्यस्त्रातुं च नो शक्यम् ॥ ६९ ॥

। अशुचित्वानुप्रेक्षा ।

171. जन्मसमुद्रे बहुदोषवीचिके दुःखजलचराकीर्णे ।
जीवस्य परिभ्रमणे निमित्तमात्रास्रवो भवति ॥ ७० ॥

172. यद्वत्सास्रवपोतो वारिधिमध्ये निमज्जति क्षिप्रम् ।
तद्वत्कर्मास्रववज्जीवः संसारवारिनिधौ ॥ ७१ ॥

173. आस्रवहेतुर्मिथ्यात्वाविरतिकषाययोगकाः पञ्च ।
द्वादशकपञ्चविंशतिपञ्चादशभेदयुक्ताश्च ॥ ७२ ॥

174. कारणवशेन गाढं लग्नं कर्मोग्रदुःखजलपूर्णे ।
भ्रमयति संसाराब्धौ सुचिरं कालं तु जन्तुगणम् ॥ ७३ ॥

175. प्रागाश्रितकर्मवशाद् दुःपरिणामा भवन्ति तेभ्योऽन्यत् ।
बध्नाति दुरितमेवं बीजाङ्कुररूपतास्रवणे ॥ ७४ ॥

। इत्यास्रवानुप्रेक्षा ।

176. संसारवारिराशेस्तरणेऽवान्तरसमुद्भवाभ्युदय– ।
प्राप्तौ च कारणं स्यात्संवरणं जन्तुनिवहस्य ॥ ७५ ॥

177. यद्वदनास्रवपोतो वाञ्छितदेशं भृशं समाप्नोति ।
तद्वदनास्रवजीवो वाञ्छितमुक्तिं समाप्नोति ॥ ७६ ॥

178. संवरहेतुः सम्यग्दर्शनसंयमकषायरहितत्वम् ।
योगनिरोधास्तेषां भेदा वेद्याः सदागमतः ॥ ७७ ॥

179. मिथ्यात्वास्रवजानां मार्गाः सम्यक्त्वदृढकवाटौघैः ।
अविरत्यास्रवजानां वर्त्मानि व्रतमहापरिघैः ॥ ७८ ॥

180. क्रोधाद्यास्रवजानां द्वाराण्यकषायभावफलकाभिः ।
योगास्रवजानां प्रणिरुध्यन्तेऽयोगतावृत्त्या ॥ ७९ ॥ युग्मम् ॥

। इति संवरानुप्रेक्षा ।

181. पूर्वोपार्जितकर्मप्रविगलनं निर्जरा विनिर्दिष्टा ।
सा द्विविधा ज्ञेया स्यादुदयोत्थोदीरणोत्था च ॥ ८० ॥

182. उदयोत्था संसृतिगतजीवानां सर्वदैव सर्वेषाम् ।
ज्ञानावरणादीनां स्थितिजे काले परिसमाप्ते ॥ ८१ ॥

183. कालेऽप्यपरिसमाप्ते परिणामप्रमहावकृष्टानाम् ।
कर्माणूनां भवति ह्युदीरणोत्था द्विभेदा सा ॥ ८२ ॥

184. देशसकलाभिधाभ्यां देशाख्यानास्तयोरनेकविधा ।
सकला तपसा महता दुरितानां निर्जरा भवति ॥८३॥ युग्मम् ॥

185. कालोपायाभ्यां फलपाकः संदृश्यते यथागेषु ।
कालोपायाभ्यां फलपाकः कर्मसु तथा भवति ॥ ८४ ॥

। इति निर्जरानुप्रेक्षा ।

186. अभ्युदयजनिःश्रेयससंभवसौख्येषु यः सदा सत्त्वम् ।
धारयति सोऽत्र धर्मोऽहिंसादिकलक्षणोपेतः ॥ ८५ ॥

187. स द्विविधः सागारोऽनगाराख्यानभेदतस्तत्र ।
प्रथमोऽप्येकादशधा दशधा प्रविभज्यते ह्यन्यः ॥ ८६ ॥

188. दृष्टिव्रतसामायिकपूर्वाः प्रथमस्य सम्यगवगम्याः ।
भेदा ह्युपासकाध्ययनोदितरूपेण विद्भिरमी ॥ ८७ ॥

189. स्युः क्षान्तिमार्दवार्जवसत्यत्यागादयो द्वितीयस्य ।
भेदा दश विज्ञेया ह्याचाराङ्गोक्तविधिनैव ॥ ८८ ॥

190. धर्मो बन्धुर्जगतां धर्मो मित्रं रसायनं धर्मः ।
स्वजनपरिजनसमूहो धर्मो धर्मो निधिनिधानम् ॥ ८९ ॥

191. धर्मः कल्पमहीजो धर्मश्चिन्तामणिश्च कामदुहः ।
धेनुर्धर्मोऽचिन्त्यं रत्नं धर्मो रसो धर्मः ॥ ९० ॥

। इति धर्मानुप्रेक्षा ।

192. बोधिस्तत्त्वार्थानां श्रद्धानं विशदबोधसंवृद्धम् ।
दुर्लभमेतद्यत्तत्प्रयत्नमस्मिन् सदा कुर्यात् ॥ ९१ ॥

193. पञ्चेन्द्रियता नृत्वं स्वायुः कुलदेशजन्ममारोग्यम् ।
रूपबलबुद्धिसत्त्वं विनयो बुधसेवनाश्रवणम् ॥ ९२ ॥

194. युक्तायुक्तविवेको युक्तिग्रहणं च धारयिष्णुत्वम् ।
चत्येतान्यतिदुर्लभतमानि बाहुल्यतोऽन्येषाम् ॥ ९३ ॥ युग्मम् ॥

195. लब्धेषु तेषु नितरां बोधिर्दुर्लभतया विशुद्धतमा ।
कुपथाकुले हि लोके यस्माद्बलिनः कषायाश्च ॥ ९४ ॥

196. इत्यतिदुर्लभरूपां बोधिं लब्ध्वा यदि प्रमादी स्यात् ।
संसृतिभीमारण्ये भ्रमति वराको नरः सुचिरम् ॥ ९५ ॥

197. पतिता बोधिः सुलभा नो पश्चात्सुमहतापि कालेन ।
पतितमनर्घ्यं रत्नं सलिलनिधावन्धकार इव ॥ ९६ ॥

। इति बोधिदुर्लभानुप्रेक्षा ।

198. आकाशस्फटिकमणिज्योतिर्वा निश्चलं कषायाणाम् ।
प्रशमक्षयजं शुक्लध्यानं कर्माटवीदहनम् ॥ ९७ ॥

199. स पृथक्त्ववितर्कान्वितवीचारप्रभृतिभेदभिन्नं तत् ।
ध्यानं चातुर्विध्यं प्राप्नोतीत्याहुराचार्याः ॥ ९८ ॥

200. अर्थेष्वेकं पूर्वश्रुतजनितज्ञानसंपदाश्रित्य ।
त्रिविधात्मकसंक्रान्त्या ध्यायत्याद्येन शुक्लेन ॥ ९९ ॥

201. वस्त्वेकं पूर्वश्रुतवेदीप्रव्यक्तमाश्रितो येन ।
ध्यायति संक्रमरहितं शुक्लध्यानं द्वितीयं तत् ॥ १०० ॥

202. कैवल्यबोधनोऽर्थान् सर्वांश्च सपर्ययांस्तृतीयेन ।
शुक्लेन ध्यायति वै सूक्ष्मीकृतकाययोगः सन् ॥ १०१ ॥

203. शीलेशितामुपेतो युगपद्विश्वार्थसंकुलं सद्यः ।
ध्यायत्यपेतयोगो येन तु शुक्लं चतुर्थं तत् ॥ १०२ ॥

204. आद्येष्वार्तध्यानं षट्स्वपि रौद्रं च पञ्चसु गुणेषु ।
धर्ममसंयतसम्यग्दृष्ट्यादिषु भवति हि चतुर्षु ॥ १०३ ॥

204*1 उक्तं च ।

तत्त्वज्ञानमुदासीनमपूर्वकरणादिषु ।
शुभाशुभमलाभावाद्विशुद्धं शुक्लमभ्यदुः ॥ इति ॥

205. शान्तकषाये प्रथमं क्षीणकषाये द्वितीयशुक्लं तु ।
भवति तृतीयं योगिनि केवलिनि चतुर्थमपयोगे ॥ १०४ ॥

206. आर्तध्यानविकल्पा नयन्ति तिर्यग्गतिस्तु देहभृतः ।
रौद्रध्यानविभेदा नरकगतीस्तीव्रपापरतान् ॥ १०५ ॥

207. धर्मध्यानविशेषाद् देवगतिं प्रापयन्त्यनेकविधाम् ।
शुक्लध्यानोत्कर्षाः सिद्धगतिं शाश्वतात्मसुखाम् ॥ १०६ ॥

208. दुःपरिणामसमुद्भवनिमित्तनिःशेषवस्तुसंत्यागः ।
व्युत्सर्गः स द्विविधो बाह्याभ्यन्तरजभेदेन ॥ १०७ ॥

209. क्षेत्रादिदशत्यागो बाह्यो व्युत्सर्ग इति सदा गद्यः ।
मिथ्यात्वादिचतुर्दशसंत्यागोऽभ्यन्तरोद्भूतः ॥ १०८ ॥

210. अभ्यन्तरजातत्वादभ्यन्तरकर्मदोषनिर्हरणात् ।
अभ्यन्तरसंज्ञं स्यादुक्तमिदं षड्विधतपस्तु ॥ १०९ ॥

॥ इति सम्यक्तप-आराधना ॥ ४ ॥

211. गुणिनः पञ्चविकल्पा ह्यर्हत्सिद्धादिसार्थनामधराः ।
स्युरुपेयोपायात्मकदृग्बोधचरित्रसुतपांसः ॥ १ ॥

212. विनिहतघातिचतुष्का नवकेवललब्धिजनितपरमात्म- ।
व्यपदेशा दिव्यध्वनिनिरूपिताशेषतत्त्वार्थाः ॥ २ ॥

213. त्रिभुवनपतिभिरभिष्टुतनिजयशसोद्भूतविहरणास्थानाः ।
देहप्रभृतिसुविभवाः सकलात्मानः स्युरर्हन्तः ॥ ३ ॥ युग्मम् ॥

214. निर्गलितसिक्थमूषाभ्यन्तररूपोपमस्वकाकृतयः ।
स्वल्पोनचरमदेहसमाना ध्रुवनिष्कलात्मानः ॥ ४ ॥

215. अष्टविधकर्मरहिताः स्वस्थीभूता निरञ्जना नित्याः ।
स्वष्टगुणाः कृतकृत्या लोकाग्रनिवासिनः सिद्धाः ॥ ५ ॥ युग्मम् ॥

216. शिष्यानुग्रहनिग्रहकुशलाः कुलजातिदेशसंशुद्धाः ।
षट्त्रिंशद्गुणयुक्तास्तात्कालिकविश्वशास्त्रज्ञाः ॥ ६ ॥

217. आचारं पञ्चविधं भव्यानाचारयन्ति ये नित्यम् ।
शक्त्याचरन्ति च स्वयमाचार्यास्ते मते जैने ॥ ७ ॥ युग्मम् ॥

218. व्रतसमितिगुप्तिसंयमशीलगुणोज्ज्वलविभूषणोपेताः ।
देशकुलादिविशुद्धा विजितकषायादिरिपुवर्गाः ॥ ८ ॥

219. स्वपरसमयागमानां व्याख्यानरताः स्वशक्तिसारेण ।
भव्याम्बुजवनदिनपाः भवन्त्युपाध्यायनामानः ॥९॥ युग्मम् ॥

220. मूलोत्तराभिधानैरखिलगुणैः शासनप्रकाशकराः ।
काले द्वितीयकेऽपि प्रवर्तमानाः प्रवरशीलाः ॥ १० ॥

221. सिंहगजवृषभमृगपशुमारुतसूर्याब्धिमन्दरेन्दुमणि- ।
क्षित्युरगाम्बरसदृशाः परमपदान्वेषिणो यतयः ॥ ११ ॥

। इत्याराध्यस्वरूपम् ।

222. उपशमवेदकसम्यग्दर्शनभाजो विशुद्धपरिणामाः ।
तद्योग्यगुणा जीवाः सम्यक्त्वाराधका ज्ञेयाः ॥ १२ ॥

223. मत्यादिपञ्चसम्यग्ज्ञानसमेतास्तदुचितगुणवन्तः ।
ज्ञानाराधकसंज्ञा भवन्ति सुविशुद्धपरिणामाः ॥ १३ ॥

224. देशविरतादिनष्टकषायान्ता वर्धमानशुभलेश्याः ।
शीलगुणभूषितास्ते चारित्राराधका ज्ञेयाः ॥ १४ ॥

225. देशविरतादिनष्टकषायान्ताः स्वोचितात्तमाचरणाः ।
संशुद्धचित्तयुक्तास्तपसो ह्याराधका गम्याः ॥ १५ ॥

226. दर्शनमाराधयता ज्ञानं आराधितं भवेन्नियमात् ।
ज्ञानं त्वाराधयता भजनीयं दर्शनं विद्यात् ॥ १६ ॥

227. सम्यग्दर्शनभाजा ज्ञानं भावात्मकं सदा इष्टि ।
द्रव्यात्मकं च तस्मात्पूर्वार्धं कथितमाचार्यैः ॥ १७ ॥

228. मिथ्यादृष्टौ च यतो द्रव्यश्रुतमस्ति तत्समालोक्य ।
शुद्धनयेनोक्तं तत्पश्चार्धं सूरिभिस्तु ततः ॥ १८ ॥

229. शुद्धनयाविज्ञानं मिथ्यादृष्टेर्भवन्ति चाज्ञानम् ।
तस्मान्मिथ्यादृष्टिर्ज्ञानस्याराधको नैव ॥ १९ ॥

230. संयममाराधयता तपः समाराधितं भवेन्नियमात् ।
आराधयता हि तपश्चारित्रं भवति भजनीयम् ॥ २० ॥

231. यस्माच्चारित्रवतस्तनुचेतोदर्परोधरूपतपः ।
संलक्ष्यते हि तस्मात्पूर्वार्धं विद्भिरुपदिष्टम् ॥ २१ ॥

232. तनुचेतोदर्पहरं तपोऽस्त्यसंयमवतोऽप्यशुद्धनयात् ।
यत्तत्समुक्तमार्यैरार्याः पश्चार्धमाचार्यैः ॥ २२ ॥

233. सम्यग्दृशोऽप्यविरतस्यास्ति तपो नैव शुद्धनयदृष्ट्या ।
तनुचेतोदण्डनमपि पूर्वार्जितपापफलमेतत् ॥ २३ ॥

234. आराधयता चरितं समस्तमाराधितं भवेन्नियमात् ।
आराधयतां शेषं चरितं भजनीयमित्याहुः ॥ २४ ॥

235. शुद्धाशुद्धनयद्वयमाश्रित्यात्यन्तमागमे निपुणाः ।
कथयन्त्वस्याभावं ज्ञात्वार्या ये गुणसमग्राः ॥ २५ ॥

। आराधकजनस्वरूपम् ।

236. शङ्कादिदोषसंकुलसंत्यागश्चेतसा सदाभ्यासः ।
निःशङ्कादिगुणानां सम्यक्त्वाराधनोपायः ॥ २६ ॥

237. अक्षरहीनाध्ययनाद्यपोहनं ज्ञानभावनाद्यमपि ।
कालाद्यध्ययनयुतं ज्ञानस्याराधनोपायः ॥ २७ ॥

238. दुर्लेश्याध्यानव्रतकषायदण्डप्रमादमदशल्याः ।
संयमगारवभयसंज्ञादिकदोषावलीत्यागः ॥ २८ ॥

239. व्रतसमितिगुप्तिसंयमसल्लेश्याध्यानभावनाधर्म- ।
शुद्धयादिगुणाभ्यासश्चारित्राराधनोपायः ॥ २९ ॥

240. द्वाविंशतिभेदपरीषहविजयः सत्त्वभावनादीनाम् ।
अभ्यासश्च भवेदिह तपसो ह्याराधनोपायः ॥ ३० ॥

। इत्याराधनोपायाः ।

241. आराधनाचतुष्कप्रभवं फलमपि चतुर्विधं भवति ।
तत्रैकैकं द्विविधं त्वमुख्यमुख्यप्रभेदेन ॥ ३१ ॥

242. एकेन्द्रियजात्यादिष्वनुद्भवः संभवस्तु नाकादि- ।
निलयेष्वमुख्यफलमिह सम्यक्त्वाराधनायास्तत् ॥ ३२ ॥

243. निःशेषदुरितनिवहक्षयकारणमचलरूपतत्त्वरुचिः ।
क्षायिकसम्यक्त्वं तन्मुख्यफलं बुधजनाभीष्टम् ॥ ३३ ।

244. अज्ञानस्य विनाशनमवधिमनःपर्ययादिसंज्ञानो- ।
त्पत्तिश्चामुख्यफलं तदुज्ज्ञानाराधनोद्भूतम् ॥ ३४ ॥

245. क्रमकरणव्यवधानापेतत्रैकाल्यवर्ति विश्वार्थ- ।
द्योती केवलबोधो मुख्यफलं तत्र भवति भृशम् ॥ ३५ ॥

246. परिहाराहारर्द्धिकसूक्ष्मचरित्रादिबहुविधोऽभ्युदयः ।
सप्तर्द्धयोऽप्यमुख्यं फलं चरित्रस्य जानीयात् ॥ ३६ ॥

उक्तं च—

बुद्धितवो वि य लद्धी विउव्वणलद्धी तहेव ओसहिया ।
रसबलअक्खीणा वि य लद्धीओ सत्त पण्णत्ता ॥

247. भवति यथाख्याताख्यं चरित्रं निःशेषवस्तुसमभावम् ।
मुख्यफलं तद्विद्याच्चारित्राराधनाप्रभवम् ॥ ३७ ॥

248. सम्यग्दृशि देशयतौ विरतेऽनन्तानुबन्धिविनियोगे ।
दर्शनमोहक्षपके कषायशमके तदुपशान्ते ॥ ३८ ॥

249. क्षपके क्षीणकषाये जिनेष्वसंख्येयसंगुणश्रेण्या ।
निर्जरणं दुरितानां तपसो मुख्यं फलं भवति ॥ ३९ ॥ युग्मम् ॥

250. अतिशयमात्मसमुत्थं विषयातीतं च निरुपममनन्तम् ।
ज्ञानमयं नित्यसुखं तपसो जातं तु मुख्यफलम् ॥ ४० ॥

। इत्याराधनाफलम् ।

251. छद्मस्थतया यस्मिन् यदि बद्धं किंचिदागमविरुद्धम् ।
शोध्यं तद् धीमद्भिर्विशुद्धबुद्ध्या विचार्य पदम् ॥ ४१ ॥

252. श्रीरविचन्द्रमुनीन्द्रैः पनसोगेग्रामवासिभिर्ग्रन्थः ।
रचितोऽयमखिलशास्त्रप्रवीणविद्वन्मनोहारी ॥ ४२ ॥

॥ इत्याराधनासमुच्चयं समाप्तम् । इति ॥

# श्लोकानुक्रमणिका

●

## उद्धृतपद्यानां सूची



●

❀ श्री पञ्चगुरुभ्यो नमः ❀

श्री-गुरुदास-विरचितः

# योगसारसंग्रहः

# Prefatory Note

Many Jaina authors have dealt with the topic of Yoga or Dhyāna; and some of their works contain in their titles the term Yoga ( H. D. Velankar : Jinaratnakośa, Poona 1945, pp. 321 f. ). There are other works like the Jñān-ārṇava, Tattvānuśāsana etc. which also deal with Yoga.

Here is presented a small text in Sanskrit, dealing with Yoga. In the transcript the opening title is Yogasāram, but the concluding colophon describes it as Yogasārasaṃgrahaḥ. In the light of the author's own statement ( see verses 36, 156–7 ) it is reasonable that Yogasārasaṃgraha is a fitting title for this work. Some works of similar names are already listed in the Jinaratnakośa; and the Yogasāra standing there against the name of Gurudāsa ( based on the information of the lists of Mss. preserved in the Ailaka Pannalal Jaina Sarasvati Bhavana, Bhuleshvar, Bombay ) is obviously identical with the work presented here.

The text of Yogasārasaṃgraha ( YSS ), published here, is based on an indifferently written transcript which the late lamented Pt. Nathu-

ramaji Premi had given me with a desire that it might be published in the Māṇikachandra D. Jaina Granthamālā. This transcript I presented to the Jaina Saṃskṛti Saṃrakṣaka Saṃgha, Sholapur. A copy of it was given to Pt. Jugalkishore Mukthar who expressed to me that this tiny work was interesting and sufficiently important. The transcript contains a number of scribal lapses and obscure contexts. The text is carefully presented here after duly correcting the copyist's slips; but wherever I found that my emendations might not be acceptable to all, I have given, in the foot-notes, the actual readings of the transcript to enable others to suggest better emendations. I am thankful to Pt. Jinadas Shastri, Sholapur, for some of the emendations suggested by him.

The name of the author is Gurudāsa who describes himself ( verse no. 158 ) as the *vatsa* of Śrīnandinandi, as the disciple of Śrīnandīguru and as the *sūnu* or son of Sarasvatī. It is difficult to interpret some of these terms, till some more independent sources are available. All that can be definitely stated at this stage is that Gurudāsa is the author and that he was a pupil of Śrīnandiguru.

